र्हितः ( मनुभ्यो देवेभ्यो हितः ) होता त्वम् । यज्ञेषु सीदसि, यज्ञानामधिष्ठाता भवसि ॥ तस्मात्-सः { त्वम् }
नः इमम् अध्वरम् । यज, देवेभ्यो देहि ॥ ' सोऽचि लोपे चेत्पादपूरणम् ' इति ' सेमम् ' इति साधु ॥ ११ ॥ [ हे
अग्ने ] देव [ त्वम् ] हि रथे । अरुषीः, अरुणाः अग्निसप्रभाः अश्वतरीः । युक्ष्व, संयोजय ॥-अथ वा, अरुषीः,

(१४५) त्वंहोतामनुर्हितोऽग्नेयज्ञेषुसीदसि ॥ सेमंनोअध्वरंयज ॥ ११ ॥

(प०) त्वम् । होता । मनुःऽहितः । अग्ने । यज्ञेषु । सीदसि ॥ सः । इमम् । नः । अध्वरम् । यज ॥११॥

(१४६) युक्ष्वाह्यरुषीरथेहरितोदेवरोहितः ॥ ताभिर्देवाँइहावह ॥ १२ ॥ २७ ॥ १४ ॥

(प०) युक्ष्व । हि । अरुषीः । रथे । हरितः । देव । रोहितः ॥ ताभिः । देवान् । इह । आ । वह ॥१२॥

(१४७) इन्द्रसोमंपिबऋतुनात्वाविशन्त्विन्दवः ॥ मत्सरासस्तदोकसः ॥ १ ॥

( प० ) इन्द्र । सोमम् । पिब । ऋतुना । आ । त्वा । विशन्तु । इंदवः ॥ मत्सरासः । तत्ऽओकसः ॥१॥

लोहिताः अश्वाः । [ च ] युक्ष्व, युङ्क्ष्व ॥ हरितः, हरिद्वर्णाः दूर्वासप्रभाः अश्वतरीः । [ च ] { युक्ष्व } ॥ रोहितः,
रोहिन्मृगीः । [ वा ] { युक्ष्व } ताभिः, ( अश्वाभिः ) अश्वतरीभी रोहिद्भिर्वा युक्तेन रथेन । देवान् । इह, यज्ञे ।
आ वह ॥ १२ ॥ इति सप्तविंशो वर्गः ॥ २७ ॥ चतुर्दशं सूक्तम् ॥ १४ ॥ अथ ' इन्द्र सोमम्-'($\frac{१५।१}{१४७}$) इति ॥ ५७ ॥

पञ्चदशं द्वादशर्चं वर्गद्वयात्मकमृतव्यं ( ऋतुदेवताकम् ) गायत्रीछन्दस्कं सूक्तम् । अवान्तरदेवताभेदश्च तत्र
तत्र ज्ञेयः ॥ (तत्र-) (आद्या तावदिन्द्रदेवतकापि ॥-) [ हे ] इन्द्र । ऋतुना, गतिहेतुत्वनिमित्तेन ऋतुशब्दित
मार्गेण, गत्येति यावत् ।-ऋतुना, पुष्पोद्भवादिस्वलिङ्गावगतिहेतुत्वहेतुना ऋतुनामकऋतुदेवतया सह ।-ऋतुना, लक्ष
णया ऋतुसंबन्धिपात्रेण ।-सोमम् पिब, इत्यृतुपदस्यार्थत्रयम्, 'ऋ गतौ' इत्यतः करणे तुप्रत्ययः ॥ तदोकसः,
तहतुपात्रमोको येषां ते तदोकसः ऋतुपात्रस्थाः । मत्सरासः, प्राग्वत् ($\frac{१४।४}{१३८}$) इंदवः ($\frac{१४।४}{१३८}$) । त्वा आ विशन्तु,

(१४८) मरुतःपिबतऋतुनापोत्राद्यज्ञंपुनीतन ॥ यूयंहिष्ठासुदानवः ॥ २ ॥

(प०) मरुतः । पिबत । ऋतुना । पोत्रात् । यज्ञम् । पुनीतन ॥ यूयम् । हि । स्थ । सुऽदानवः ॥ २ ॥

त्वदुदरस्था भवन्तु ॥ १ ॥ [ हे ] मरुतः । ऋतुना, प्राग्वत् ($\frac{१५।१}{१४७}$) पोत्रात्, पावनहेतुना पोतृदैवतात्वहेतुना च पो
तृनामकानां भवतां संबन्धिनः पात्रात्, तृतीयार्थे पञ्चमी, पोतृपात्रेण । पिबत । '[ सोमम् ]' इति शेषः ॥ पीत्वा
च-यज्ञम् । पुनीतन, पावयत, 'त' इत्यस्य 'तप्तनप्तनथनाश्च' इति तनादेशः ॥ ततश्च-यूयम् । हि, यस्मात् । सुदा
नवः, शोभनदानशीलाः ।-स्थ, ददातेः नुः, तस्मादस्मभ्यमभिमतं दत्तेत्यभिप्रायः ॥ 'हि ष्ठा' इति सुषामादित्वात्षत्व

म् ॥२॥ (तृतीयस्यां विष्णुरिन्द्रोऽग्निस्त्वष्टा वापि देवता ॥–) [हे] नेष्टः, नेतृत्वहेतुना नेष्टृत्विग्देवतात्वहेतुना च नेष्टृपदोक्त=विष्णो, इन्द्र, अग्ने, त्वष्टर्वा, 'नयतेः षुक्च' इति तृन्षुगागमश्च, 'पुगन्त–' इति गुणः, ष्टुत्वम् । ग्नावः, गमनशीलत्वाद् ग्ना नद्यः, गमेः नो डिच्च, ग्ना अस्य सन्तीति ग्नावान्, तस्य संबुद्धिर्ग्नावन्, 'मतुवसो रु संबुद्धौ छन्दसि' इति रुः, ग्नावः, नदीदेवीभिः सहित। ऋतुना, प्राग्वत् (१५।१/१४७)। पिब [सोमम्] ॥ पीत्वा च–नः यज्ञम्। अभि गृणीहि, 'साधु

(१४९) अभियज्ञंगृणीहिनोग्नावोनेष्टःपिबऋतुना ॥ त्वंहिरत्नधाअसि ॥ ३ ॥

(प०) अभि । यज्ञम् । गृणीहि । नः। ग्नावः। नेष्टरिति । पिब । ऋतुना॥ त्वम् । हि। रत्नऽधाः । असि॥

(१५०) अग्नेदेवाँइहावहसादयायोनिषुत्रिषु ॥ परिभूषपिबऋतुना ॥ ४ ॥

(प०) ॥०॥ (१२।३/११३) । सादय । योनिषु । त्रिषु ॥ परि । भूष । पिब । ऋतुना ॥ ४ ॥

रयम्' इति प्रशंसावाक्यं ब्रूहि ॥ त्वम् । हि, यस्मात्। रत्नधाः, रतिधारकः।–असि, 'रत्नऽधातमम्' (१।१/१) इत्यत्र व्युत्पादितमेवैतत्पदम्, तस्मादस्मभ्यं रतिं देहीति भावः ॥ विष्णौ तु– न विद्यते ईष्टेशिता यस्यासौ 'नेष्टा' इत्येवं व्युत्पत्त्यन्तरं च ध्येयम् ॥ ३ ॥ ( चतुर्थ्यामग्निरपि देवता ॥– ) [हे] अग्ने देवान् । इह, यज्ञे । आ वह ॥ आगताँश्च–त्रिषु, तिसृषु । योनिषु, स्थानेषु, उत्तरवेदिसदःप्राग्वंशेषु । सादय, उपवेशय ॥ परिभूष, देवोपवेशनेन नो यज्ञं प ॥ ५८ ॥

रिभूषय ॥ 'पिब ऋतुना' इत्युक्तार्थम् ( १५।१/१४७ ) ॥ ४ ॥ ( पञ्चम्यपीन्द्रदेवतकापि ॥– ) [हे] इन्द्र [त्वम्] राधसः, नो राधसोऽर्थे, इष्टसिद्ध्यर्थम् । ऋतून् अनु, ऋतुदेवताभिः सहेति यावत् । ब्राह्मणात्, 'ब्रह्मा' इति ब्राह्मणाच्छंसिरूपऋत्विग्विशेषः, तस्येदं ब्राह्मणम्, तस्मात्, तृतीयार्थे पञ्चमी, ब्राह्मणाच्छंसिपात्रेण। सोमम् पिब ॥ हि, यस्मात्। तव इत्, तवैव । सख्यम् । अस्तृतम्, अच्छिन्नम्, तस्मादस्माकं सखा त्वं सोमं पिब ॥–इति ॥ ५ ॥ (षष्ठयां)

(१५१) ब्राह्मणादिन्द्रराधसःपिबासोममृतूँरनु ॥ तवेद्धिसख्यमस्तृतम् ॥ ५ ॥

(प०) ब्राह्मणात् । इन्द्र । राधसः । पिब । सोमम् । ऋतून् । अनु ॥ तव । इत् । हि । सख्यम् । अस्तृतम् ॥ ५ ॥

(१५२) युवंदक्षंधृतव्रतमित्रावरुणदूळभम् ॥ ऋतुनायज्ञमाशाथे ॥ ६ ॥ २८ ॥

(प०) युवम् । दक्षम् । धृतऽव्रता । मित्रावरुणा । दुःऽदभम् ॥ ऋतुना । यज्ञम् । अशाथेइति ॥६॥२८

मित्रावरुणावपि देवते ॥–) [हे] मित्रावरुणा, मित्रावरुणौ । धृतव्रता, धृतव्रतौ, धृतं व्रतं जगद्रक्षादिकर्म याभ्यां तौ । युवम्, युवामेव । ऋतुना, पात्रेण ।– '[सोमं पीत्वा]' इति शेषः ।– ऋतुदेवतया सहेति वा । दुर्दभम्, अस्तभ्यम्, स्वकर्मणि निष्ठितम् । दक्षम्, दक्षाख्यं यजमानम् । यज्ञम् [च] । आशाथे, ईशाथे, नियमयथः, ततस्तदीयसोम

मन्त्रार्थ- पानेन प्रसन्नौ पुनस्तं प्रवर्तयथ इति भावः ॥ अत्र ' धृतव्रत–' इत्यादौ संहितायां ह्रस्वत्वं दीर्घान्ततया पदच्छेदस्तयो मञ्जरी.
रैक्यद्योतनाय ।– तच्चैक्यम्=विष्णुरूपयोः स्वरूपैक्यम्, मित्रावरुणयोस्तु मत्यैक्यम्,–इति ज्ञेयम् ॥ ६ ॥ इत्यष्टाविं
अ.१अ.१ शो वर्गः ॥ २८ ॥ ( (१५।७/१५३), (१५।८/१५४), (१५।९/१५५), (१५।१०/१५६) ), एतदृक्चतुष्टयस्य द्रविणोदा अपि देवता ॥–) द्रवि व० २९
॥ ५९ ॥ णोदाः, होता । द्रविणसः, होतृकाः । [च] । अध्वरे, अध्वरेषु, 'अग्ने यं यज्ञम्–' ( ४ ) इत्यत्र व्युत्पादितमेतत्प

(१५३) द्रविणोदाद्रविणसोग्रावहस्तासोअध्वरे ॥ यज्ञेषुदेवमीळते ॥ ७ ॥

(प० ) द्रविणःऽदाः । द्रविणसः । ग्रावऽहस्तासः । अध्वरे ॥ यज्ञेषु । देवम् । ईळते ॥ ७ ॥

(१५४) द्रविणोदाददातुनोवसूनियानिशृण्विरे ॥ देवेषुतावनामहे ॥ ८ ॥

(प० ) द्रविणःऽदाः । ददातु । नः । वसूनि । यानि । शृण्विरे ॥ देवेषु । ता । वनामहे ॥ ८ ॥

दम्, यथाविध्यनुष्ठितेषु । यज्ञेषु । ग्रावहस्तासः, सोमसवनार्थं ग्रावहस्ताः सन्तः । देवम्, विष्णुम्, अग्निभिः सहितं प्रधानाग्निं च । ईळते, स्तुवन्ति ॥ ७ ॥ द्रविणोदाः, होतृदेवतात्वादग्निरत्र द्रविणोदा ग्राह्यः । यानि वसूनि । शृ
ण्विरे, श्रुतानि, प्रसिद्धानीति यावत् । {ता}, तानि । नः, अस्मभ्यम् । ददातु ॥ ता, तानि । [च वयम्] । देवेषु, ॥ ५९ ॥
देवनिमित्तमेव वनामहे, संभजामः, न तु स्वदेहपोषणार्थमित्यर्थः ॥–यद्वा–ता, तानि । [वयम्] । देवेषु, देवेभ्यः ।

वनामहे, वनतिः अत्र दानार्थः, दद्मः ॥ ८ ॥ द्रविणोदाः । पिपीषति, 'पीङ् पाने' पातुमिच्छति ॥ [सोमाः] च [तस्मै] ।– प्र तिष्ठत, प्रातिष्ठन्त, तदुद्देशेनैव प्रतिष्ठिताः सन्ति ॥ [अतस्ताँस्तस्मै] जुहोत, जुहुत ॥ किं च, नेष्ट्रात्, नेष्टुः, पत्नीनेतृत्वतो नेष्टृनामकऋत्विजः लक्षणया तत्संबन्धिपात्रात्, पञ्चमी तृतीयार्थे, नेष्टृपात्रेण । ऋतुभिः, ऋतुपात्रैः,

(१५५) द्रविणोदाःपिपीषतिजुहोतप्रचतिष्ठत ॥ नेष्ट्रादृतुभिरिष्यत ॥ ९ ॥

(प० ) द्रविणःऽदाः । पिपीषति । जुहोत । प्र । च । तिष्ठत ॥ नेष्ट्रात् । ऋतुऽभिः । इष्यत ॥ ९ ॥

(१५६) यत्त्वातुरीयमृतुभिर्द्रविणोदोयजामहे ॥ अधस्मानोददिर्भव ॥ १० ॥

(प०) यत् । त्वा । तुरीयम् । ऋतुऽभिः । द्रविणःऽदः । यजामहे ॥ अध । स्म । नः । ददिः । भव ॥ १०

ऋतुदेवताभिः सहेति वा । [एनम्], अग्निम् । इष्यत, अभीप्सत । '[पूज्यत्वेन]' इति शेषः ॥९॥ [हे] द्रविणोदः, अग्ने । ऋतुभिः, ऋतुपात्रैः, तद्देवताभिः सह वा । तुरीयम्, चतुर्थवारमपि । यत्, यस्मात् । त्वा, त्वाम् । यजामहे । अध, अथ, तस्मात् । नः, अस्मभ्यम् । ददिः भव, 'दद दाने' किप्रत्ययः, ('डुदाञ् दाने'

मन्त्रार्थ- 'आदृगमहन–' इति किप्रत्ययो वा, ) दाता भव । स्म ॥ १० ॥ ( एकादश्यामश्विनावपि देवते ॥– ) मञ्जरी.
अ.१अ.१ अश्विना, निरुक्तमेतत् 'अश्विना यज्वरी–' ($\frac{३।१}{१९}$) इत्यत्र, हे अश्विनौ । दीद्यग्नी, दीप्ताग्नी, अतिशयेन दीप्ताग्निसदृशाविति यावत्, 'दीपी दीप्तौ' इत्यतो यङ्लुगन्ताड्डिप्रत्यये टिलोपे 'दीदि' इति सिद्धेः । शुचिव्रता, शुचिव्रतौ, व० ३०
॥ ६० ॥ शुचि पवित्रं व्रतं कर्म ययोस्तौ शुचिव्रतौ । यज्ञवाहसा, यज्ञवाहसौ, यज्ञानां प्रवर्तकौ । [युवाम्] । ऋतुना,

(१५७) अश्विनापिबतंमधुदीद्यग्नीशुचिव्रता ॥ ऋतुनायज्ञवाहसा ॥ ११ ॥

(प०) अश्विना । पिबतम् । मधु । दीद्यग्नीइतिदीदिऽअग्नी । शुचिऽव्रता ॥ ऋतुना । यज्ञऽवाहसा ॥ ११ ॥

(१५८) गार्हपत्येनसंत्यऋतुनायज्ञनीरसि ॥ देवान्देवयतेयज ॥ १२ ॥ २९ ॥ १५ ॥

(प०) गार्हऽपत्येन । संत्य । ऋतुना । यज्ञऽनीः । असि ॥ देवान् । देवऽयते । यज ॥ १२ ॥ २९ ॥ १५ ॥

पूर्ववत् ($\frac{१५।१}{१४७}$) । मधु, सोमम् । पिबतम् ॥ ११ ॥ (द्वादश्यां विष्णुरग्निर्वापि देवता ॥–) [हे] संत्य, अजस्रत्वरूपव्याप्तत्वरूपसंततत्वहेतुना यथाक्रमं 'संत्य!' इत्युक्त=हे अग्ने, हे विष्णो, सम्पूर्वात् 'तनु विस्तारे' इत्यतो ड्यप्रत्ययः । [यस्त्वम्] । गार्हपत्येन, पात्रेण । ऋतुना, पात्रेण । [च], ऋतुदेवतया सहेति वा । [सोमं पीत्वा]' इति ॥ ६० ॥
शेषः । यज्ञनीः, यज्ञानां प्रवर्तकः । असि । [स च त्वम्] देवयते, देवानेतीति व्युत्पत्त्या देवयन्यजमानः, इणः

शतृप्रत्ययः, तस्मै, तत्प्रयोजनाय । देवान् यज ॥ अत्र सूक्ते सर्वत्र 'ऋतुदेवतया सह' इत्युक्तऋतुदेवताः–द्वादशमासाधिपेषु केशवादिषु द्वादशसु यथाक्रमं केशवादिद्वयंद्वयं षड्तुषु च ज्ञेयम् । ( ऋत्वधिपत्वं ) मासाधिपत्वं च विष्णोः–'सुपर्णं विप्राः–' ( ऋ० म० १०।११४।५ ) इति श्रुतिसिद्धम् । श्रुत्यर्थश्लोकायां व्यक्तः ॥ १२ ॥ इत्येकोनत्रिंशो वर्गः ॥ २९ ॥ पञ्चदशंसूक्तम् ॥ १५ ॥ अथ 'आ त्वा–' ($\frac{१६।१}{१५९}$) इति षोडशं नवर्चं वर्गद्वयात्मकमैन्द्रं गायत्रीछन्दस्कं

(१५९) आत्वावहन्तुहरयोवृषणंसोमपीतये ॥ इन्द्रंत्वासूरऽचक्षसः ॥ १ ॥

(प०) आ । त्वा । वहन्तु । हरयः । वृषणम् । सोमऽपीतये ॥ इन्द्र । त्वा । सूरऽचक्षसः ॥ १ ॥

(१६०) इमाधानाघृतस्नुवोहरीइहोपवक्षतः ॥ इन्द्रंसुखतमेरथे ॥ २ ॥

(प०) इमाः । धानाः । घृतऽस्नुवः । हरीइति । इह । उप । वक्षतः ॥ इन्द्रम् । सुखऽतमे । रथे ॥ २ ॥

सूक्तम् ॥ [हे] इन्द्र । वृषणम्, वर्षितारम् । त्वा, त्वाम् । सोमपीतये, सोमपानाय । सूरचक्षसः, सुष्ठूराणि सम्यग्विषयविषयकाणि चक्षांसि चक्षुंषि येषां ते सूरचक्षसः, ऊरीशब्दपर्याय ऊरशब्दः, 'सुष्ठूरीकुर्वन्ति विषयानिति सूराणि' इति व्युत्पत्त्या सम्यग्वस्तुविषयकत्वं सूरशब्दस्य ज्ञेयम् । त्वा, तव । हरयः, अश्वाः । आ वहन्तु ॥ १ ॥ [हे] हरी, इन्द्रसंबन्ध्यश्वौ । [युवयोरथे] इमाः धानाः । घृतस्नुवः, घृतार्द्राः सन्ति, 'ष्णु प्रस्रवणे' इति धातोर्विच् ॥

मन्त्रार्थ- तस्मात्-इन्द्रम् । सुखतमे रथे '[स्थितम्]' इति शेषः, सुखतमेन रथेनेति वा इह, यज्ञे । उप वक्षतः, उपवहतम् ॥ मञ्जरी.
अ.१अ.१ अध्यात्मं तु– [हे] हरी, मनोबुद्धी । [इन्द्रार्थाः] इमाः । घृतस्नुवः, स्नेहसाम्याद्धृतं भक्तिस्तया स्नुवः स्नुता आर्द्राः, व० ३०
भक्तियुक्ता इति यावत् । धानाः, बुद्धिवृत्तिविशेषाः सन्ति ॥ तस्मात्-इह सुखतमे । रथे, शरीरे । इन्द्रम् । उप
॥ ६१ ॥ वक्षतः, वहतेः लेट्यडागमे सिपि ढत्व-कत्व-षत्वेषु रूपम्, उपवहतम् (संनिधापयतम्) ॥-इत्यर्थः ॥ २ ॥ प्रातः,

(१६१) इन्द्रंप्रातर्हवामहइन्द्रंप्रयत्यध्वरे ॥ इन्द्रंसोमस्यपीतये ॥ ३ ॥

(प०) इन्द्रम । प्रातः । हवामहे । इन्द्रम । प्रऽयति । अध्वरे ॥ इन्द्रम । सोमस्य । पीतये ॥ ३ ॥

(१६२) उपनःसुतमागहिहरिभिरिन्द्रकेशिभिः ॥ सुतेहित्वाहवामहे ॥ ४ ॥

(प०) उप । नः । सुतम् । आ । गहि । हरिऽभिः । इन्द्र । केशिऽभिः ॥ सुते । हि । त्वा । हवामहे ॥४॥

प्रातःसवने । इन्द्रम् [वयम्] हवामहे ॥ अध्वरे, यज्ञे । प्रयति, प्रवर्तमाने, माध्यंदिनसवन इति यावत् । इन्द्रम् [वयम्] { वहामहे } ॥ सोमस्य पीतये, तृतीयसवने सोमपानस्य पर्यवसानात् 'असाधारण्येन व्यपदेशा भवन्ति' इति सोमपीतिशब्देन तृतीयसवनग्रहः, (तृतीयसवनेऽपि) सोमपानार्थम् । इन्द्रम् [वयम्] । { हवामहे }, आह्वयामः ॥३॥ [हे] इन्द्र । केशिभिः, प्रलम्बकेशयुक्तैः । हरिभिः, अश्वैः । नः । सुतम्, सोमम् । उप आ गहि, उपागच्छ ॥ ६१ ॥

॥– हि, यस्मात् । त्वा, त्वाम् । [सोमे] सुते [सति] हवामहे [तस्मात्] ॥ ४ ॥ [हे इन्द्र] सः [त्वम्] नः इमम् । स्तोमम्, स्तुतिम् । इदम् सवनम् [च] सुतम्, सोमम् । [च] उप आ गहि ॥ आगत्य च-तृषितः । गौरः न, मृगविशेष इव । [सोमम्] पिब ॥ ५ ॥ इति त्रिंशो वर्गः ॥ ३० ॥ [हे] इन्द्र इमे । इंदवः, इष्टदाः

(१६३) सेमंनःस्तोममागह्युपेदंसवनंसुतम् ॥ गौरोनतृषितःपिब ॥ ५ ॥ ३० ॥

(प०) सः । इमम । नः । स्तोमम । आ । गहि । उप । इदम । सवनम । सुतम ॥ गौरः । न । तृषितः । पिब ५

(१६४) इमेसोमासइंदवःसुतासोअधिबर्हिषि ॥ ताँइन्द्रसहसेपिब ॥ ६ ॥

(प०) इमे । सोमासः । इंदवः । सुतासः । अधि । बर्हिषि ॥ तान् । इन्द्र । सहसे । पिब ॥ ६ ॥

(१६५) अयंतेस्तोमोअग्रियोहृदिस्पृगस्तुशंतमः ॥ अथासोमंसुतंपिब ॥ ७ ॥

(द०) अयम । ते । स्तोमः । अग्रियः । हृदिऽस्पृक् । अस्तु । शमऽतमः ॥ अथ । सोमम । सुतम । पिब ॥७॥

(३४।४ / १३८) सुतासः, अभिषुताः । सोमासः, सोमाः । अधि बर्हिषि, बर्हिषि, उपरि । [सन्ति] ॥ तान्, सोमान् । सहसे, बलार्थम् । पिब ॥ हरिपक्षे–यजमानस्य बलार्थमिति वा त्वदीयबलाभिव्यक्त्यर्थं वेति व्याख्या ।–बलाभिव्यक्तिर्भक्ताभीष्टदानं ज्ञेयम् ॥ ६ ॥ [हे] इन्द्र । अग्रियः, अग्र्यः । शंतमः, श्रोतॄणामतिशयेन सुखप्रदः । अयम् ।

मन्त्रार्थ- स्तोमः, स्तुतिः । ते । हृदिस्पृक्, हृदयंगमः । अस्तु ॥ अथ [स्तुत्या प्रीतस्त्वम्] । सुतम्, अभिषुतम् । सोमम् मञ्जरी.
पिब ॥ ७ ॥ वृत्रहा इन्द्रः । मदाय, यजमानस्य हर्षाय, स्वगुणव्यक्तये वा । सोमपीतये । विश्वम्, सर्वम् । इत्, व० ३१
अ.१अ.१ एव । सवनम्, सर्वेष्वपि सवनेषु । सुतम्, सोमं प्रति । गच्छति ॥ ८ ॥ [हे] शतक्रतो सः [त्वम्] । नः, अस्मा

॥ ६२ ॥ (१६६) विश्वमित्सवनंसुतमिन्द्रोमदायगच्छति ॥ वृत्रहासोमपीतये ॥ ८ ॥

(प०) विश्वम् । इत् । सवनम् । सुतम् । इन्द्रः । मदाय । गच्छति ॥ वृत्रऽहा । सोमऽपीतये ॥ ८ ॥

(१६७) सेमंनःकाममापृणगोभिरश्वैःशतक्रतो ॥ स्तवामत्वास्वाध्यः ॥ ९ ॥ ३१ ॥ १६ ॥

(प०) ० (१६।५ / १६३) । कामम् । आ । पृण । गोभिः । अश्वैः । शतक्रतोइतिशतऽक्रतो ॥ स्तवाम । त्वा । सुऽआध्यः ॥ ९ ॥ ३१ ॥ १६ ॥

कम् । इमम्, गवादिविषयकम् । कामम्, अभिलाषम् । गोभिः अश्वैः, गवाश्वं दत्त्वा । आ पृण, संपूरय, 'पृण प्रीणने' इत्यस्येह पूर्त्यर्थत्वं धातूनामनेकार्थत्वात् ॥ [वयम्] । स्वाध्यः, स्वाधियः, 'सु, आङ्' इत्युसर्गद्वयपूर्वस्य धीशब्दस्य बहुवचनम्, यणादेशश्छान्दसः,–'नञा निर्दिष्टमनित्यम्' इति 'न भूसुधियोः' इति यण्निषेधस्यानित्यत्वाद्वा, ॥ ६२ ॥

सूत्रे 'सुधी' इति रूपग्रहणादिह यण्निषेधस्याप्राप्तेर्वा, सुधियो भूत्वा । त्वा, त्वाम् । स्तवाम, 'ष्टुञ् स्तुतौ' लोट् ॥ ९ ॥ इत्येकत्रिंशो वर्गः ॥ ३१ ॥ षोडशं सूक्तम् ॥ १६ ॥ 'अथ इन्द्रावरुणयोरहम्–' (१७।१ / १६८) इति सप्तदशं नवर्चं वर्गद्वयात्मकमैन्द्रावरुणं सूक्तम् । (१७।४ / १७१), (१७।५ / १७२) एते विना गायत्रीछन्दस्कम् ॥– अहम् । सम्राजोः, सम्यग्दीप्तयोः, 'राजृ दीप्तौ' इति धातोः क्विप् । इन्द्रावरुणयोः ।–अवः, अवनम्, इन्द्रवरुणकर्तृकं रक्षणम् । आ

(१६८) इन्द्रावरुणयोरहंसम्राजोरवआवृणे ॥ तानोमृळातईदृशे ॥ १ ॥

(प०) इन्द्रावरुणयोः । अहम् । सम्ऽराजोः । अवः । आ । वृणे ॥ ता । नः । मृळातः । ईदृशे ॥ १ ॥

(१६९) गन्तारािहिस्थोऽवसेहवंविप्रस्यमावतः ॥ धर्तारांचर्षणीनाम ॥ २ ॥

(प०) गन्तारा । हि । स्थः । अवसे । हवम् । विप्रस्य । माऽवतः ॥ धर्तारा । चर्षणीनाम ॥ २ ॥

वृणे, प्रार्थये ॥ ता, तौ चेन्द्रावरुणौ । नः, अस्माकम् । ईदृशे, भावप्रधानम्, ईदृक्त्वाय, अविकारेणैवावस्थानायेति यावत् । मृळातः, रक्षेताम् ॥ १ ॥ [हे इन्द्रावरुणौ] । चर्षणीनाम्, प्रजानाम् । धर्तारा, धर्तारौ, धारकौ । [युवाम्] । मावतः, ज्ञानयुक्तस्य । विप्रस्य । हवम्, आह्वानं प्रति ।–अवसे, तस्य रक्षायै । गन्तारा, गन्तारौ । स्थः । हि,

यस्मात् । [ तस्मादागच्छतम् ] ॥–इति ॥ २ ॥ इन्द्रावरुणा, हे इन्द्रावरुणौ । [ अस्मान् ] । रायः, वित्तस्य विषये । अनुकामम्, यथेष्टम् । आ तर्पयेथाम्, तृप्तान्कुरुतम् ॥ [ वयं च ] । ता वाम्, तौ युवाम् । नेदिष्ठम्, क्षिप्रम् । ईमहे '[ शरणम् ]' इति शेषः, शरणं प्राप्नुम इत्यर्थः ॥ ३ ॥ ( चतुर्थी गायत्रीविशेषपादनिचृच्छन्दस्का ॥–) [ हे इन्द्रावरुणौ वयम् ] । युवाकु, लुप्तषष्ठीकं बहुवचनान्तम्, युष्मद आकुः, युवयोः संबन्धिनीनाम् ।

(१७०) अनुकामंतर्पयेथामिन्द्रावरुणरायआ ॥ तावांनेदिष्ठमीमहे ॥ ३ ॥

(प०) अनुऽकामम् । तर्पयेथाम् । इन्द्रावरुणा । रायः । आ ॥ ता । वाम् । नेदिष्ठम् । ईमहे ॥ ३ ॥

(१७१) युवाकुहिशचीनांयुवाकुसुमतीनाम् ॥ भूयामवाजदाव्नाम् ॥ ४ ॥

(प०) युवाकु । हि । शचीनाम् । युवाकु । सुऽमतीनाम् ॥ भूयाम । वाजऽदाव्नाम् ॥ ४ ॥

शचीनाम्, वाक्यानाम्, 'साधवो यूयम्' इत्येवंरूपाणाम् । तथा–युवाकु सुमतीनाम्, युष्मत्संबन्धिबुद्धीनाम् । [ सर्वदा विषयाः ]। भूयाम, भवेम, विकरणस्य लुक् ॥–किं च, वाजदाव्नाम्, अन्नप्रदातृणाम् ।–[सर्वदा विषयाः]।–{भूयाम}, सर्वपूज्या भवेम॥–इति॥–आतो वनिप्॥–हि॥४॥(पञ्चमी पादनिचृद्गसीयसी वा गायत्रीविशेषश्छन्दः) ॥ ६३ ॥

इन्द्रः । सहस्रदाव्नाम्, भूरिदातृणाम् । शंस्यानाम्, स्तुत्यानाम् । [च] । क्रतुः भवति, क्रतुरिव क्रतुः, यथा क्रतुः कर्ममध्ये प्रधानस्तथा प्रधान इत्यर्थः॥ उक्थ्यः, उक्थैः शस्त्रैः स्तुत्यः । [च] ॥–एवम्–'वरुणः–[ अपि ]' इति योज्यम् ॥ ५ ॥ इति द्वात्रिंशो वर्गः ॥ ३२ ॥ वयम् । तयोः इत्, इन्द्रावरुणयोरेव । अवसा, रक्षणेन । सनेम, वित्तं

(१७२) इन्द्रःसहस्रदाव्नांवरुणःशंस्यानाम् ॥ क्रतुर्भवत्युक्थ्यः ॥ ५ ॥ ३२ ॥

(प०) इन्द्रः । सहस्रऽदाव्नाम् । वरुणः । शंस्यानाम् ॥ क्रतुः । भवति । उक्थ्यः ॥ ५ ॥ ३२॥

(१७३) तयोरिदवसावयंसनेमनिचधीमहि ॥ स्यादुतप्ररेचनम् ॥ ६ ॥

(प०) तयोः । इत् । अवसा । वयम् । सनेम । नि । च । धीमहि ॥ स्यात् । उत । प्रऽरेचनम् ॥ ६ ॥

(१७४) इन्द्रावरुणवामहंहुवेचित्रायराधसे ॥ अस्मान्त्सुजिग्युषस्कृतम् ॥ ७ ॥

(प०) इन्द्रावरुणा । वाम् । अहम् । हुवे । चित्राय । राधसे ॥ अस्मान् । सु । जिग्युषः । कृतम्॥७॥

ज्ञानं वा सदाप्नुमः ॥ नि धीमहि च, निखाय स्थापयाम च, सदा ताविन्द्रावरुणौ चिन्तयाम चेति वा ॥ किं च, [ अस्माकम् ]। प्ररेचनम्, विसर्जनम्, आर्थिने दानम् । स्यात् उत, स्यादेव ॥६॥ [हे] इन्द्रावरुणा, इन्द्रावरुणौ । अहम् । चित्राय, भद्राय । राधसे, संसिद्ध्यर्थम् । वाम्, युवाम् । हुवे, आह्वयामि॥ [युवाम्] अस्मान् । सु जिग्युषः,

सुजितवतः । कृतम्, कुरुतम् ॥ अत्र 'इन्द्रावरुण' इत्यत्र संहितापदयोर्वैरूप्यतात्पर्यम्–'युवं दक्षं धृतव्रत–' (१५।६/१५२) इत्यत्रोक्तम् ॥ ७ ॥ [हे] इन्द्रावरुणा, इन्द्रावरुणौ । नु, अद्य । वाम्, युवाम् । नु, नुमः, 'णु स्तुतौ' कर्त्रर्थकलादेशस्य 'मस्' इति प्रत्ययस्य लोपेन धातुमात्रनिर्देशः–'अस्माकं स्तुतौ न कर्तृत्वम्, तवैव स्वातन्त्र्यम्' इति ज्ञापनाय, कर्त्रर्थकप्रत्ययाभावे कर्तृत्वाभावस्य सुज्ञानत्वात्, 'लोपः स्वातन्त्र्यार्थे' इति चिरंतनव्याकरणोक्तेः,–इति ज्ञेयम् ॥ धीषु, अस्मद्बुद्धिषु ।

(१७५) इन्द्रावरुणनूनुवांसिषासन्तीषुधीष्वा ॥ अस्मभ्यंशर्मयच्छतम ॥ ८ ॥

(प०) इन्द्रावरुणा । नु । नु । वाम् । सिसासन्तीषु । धीषु । आ ॥ अस्मभ्यम् । शर्म । यच्छतम ८

(१७६) प्रवामश्नोतुसुष्टुतिरिन्द्रावरुणयांहुवे ॥ यामृधाथेसधस्तुतिम् ॥ ९ ॥ ३३ ॥ १७ ॥ ४ ॥

(प०) प्र । वाम् । अश्नोतु । सुऽस्तुतिः । इन्द्रावरुणा । याम् । हुवे ॥ याम् । ऋधाथेइति । सधऽस्तुतिम् ॥ ९ ॥ ३३ ॥ १७ ॥ ४ ॥

(वाम्), युवाम् । आ सिसासन्तीषु, साधयन्तीषु, सम्यक्प्रकाशयन्तीष्विति यावत्, साधयतेः स्वार्थे सन्, द्विर्वचनम्, अभ्यासस्य 'सन्यतः' इतीत्वम्, इडभावधकारलोपौ छान्दसौ, शतृ–ङीपौ । अस्मभ्यम् । शर्म, सुखम् । यच्छतम्, प्रयच्छतम्, यतो युवामस्मद्बुद्धयः प्रकाशयन्ति तस्मात्सुखमस्मभ्यं दत्तमिति भावः ॥ ८ ॥ हे इन्द्रावरुणा,



इन्द्रावरुणौ, वैरूप्यतात्पर्यं प्राग्वत् (१५।६/१५२) । [अहम्] याम्, सुष्टुतिम् । हुवे, आह्वयामि, संपादयामीति यावत्, तृतीयार्थे वा द्वितीया, यया स्तुत्या वां हुव इत्यर्थः । [सा] । सुष्टुतिः, शोभना स्तुतिः । वाम् । प्र अश्नोतु, प्राश्नुताम्, प्राप्नोतु, सम्यगाप्नोतु, 'अशू व्याप्तौ–' लोट्, ॥ तस्यां च न मे स्वातन्त्र्यम्, किं तु, याम् । सधस्तुतिम्, 'सध' इति सहशब्दपर्यायः, अर्थसहितस्तुतिम्, यथास्थितस्तुतिम् । [मे सदैव] । ऋधाथे, वर्धयेथे, प्रवर्तयथ इति यावत्, 'ऋधु वृद्धौ' व्यत्ययेन लुग्विकरणम्, अन्तर्णीतणिजर्थत्वं च 'सा वाम् प्र अश्नोतु' इत्यन्वयः

(१७७) सोमानंस्वरणंकृणुहिब्रह्मणस्पते ॥ कक्षीवन्तंयऔशिजः ॥ १ ॥

(प०) सोमानम् । स्वरणम् । कृणुहि । ब्रह्मणः । पते ॥ कक्षीवन्तम् । यः । औशिजः ॥ १ ॥

॥ ९ ॥ इति त्रयस्त्रिंशो वर्गः ॥ ३३ ॥ सप्तदशं सूक्तम् ॥ १७ ॥ चतुर्थोऽनुवाकः ॥ ४ ॥ अथ 'सोमानम्' (३८।३/१७७) इत्यष्टादशं नवर्चं वर्गद्वयात्मकं गायत्रीछन्दस्कं सूक्तम् । अत्रादितः पञ्च ब्राह्मणस्पत्याः, चतुर्थ्यां पञ्चम्यां चेन्द्रः सोमोऽपि च, पञ्चम्यां दक्षिणापि, शिष्टाश्चतस्रः सादसस्पत्याः, अन्त्या नाराशंसी वा ॥ –[हे] ब्रह्मणः पते, ब्रह्मणो वेदस्य पते, पारस्करादित्वात्सुट्, ('षष्ठ्याः पतिपुत्र' इत्यादिना सत्वम्,) विष्णो, वायो वा । [त्वम्] । [नः], अस्मान्प्रति । [कारुण्यात्] । सोमानम् स्वरणम्, सौम्यं शब्दम् । कृणुहि, करु ॥– यः, शब्दः ।

[प्राक्]। कक्षीवन्तम्, ऋषिम्, मामिति यावत्। [प्रति दत्तः]। तादृशम् ॥– कः कक्षीवान्? {यः}। औशिजः, उशिक्सुतः। सः ॥ १ ॥ यः। रेवान्, वित्तवान्, 'रयेर्मतौ–' इति रयिशब्दयकारस्य मतुपि परतः संप्रसारणे पूर्वरूपे 'आद्गुणः'। यः [च]। अमीवहा, रोगहा। वसुवित्, ज्ञानाख्यवसुनो वेदिता, ज्ञातव्यं सर्वं जानातीति यावत्। {यः} [च]। पुष्टिवर्धनः, भक्तानामेवंभूतः। यः। तुरः, वेगवत्त्वहेतुना विष्णुर्वायुर्वा, 'तुर त्वरणे' इत्यतः कप्रत्ययः।

(१७८) योरे॒वान्योअमी॑व॒हावसु॒वित्पु॑ष्टि॒वर्धनः ॥ सनः॑सिषक्तु॒यस्तु॒रः ॥ २ ॥

(प०) यः। रे॒वान्। यः। अ॒मी॒व॒ऽहा। व॒सु॒ऽवित्। पु॒ष्टि॒ऽवर्धनः ॥ सः। न॒ः। सि॒ष॒क्तु॒। यः। तु॒रः॥२॥

(१७९) मान॒ःशंसो॒अररुषोधूर्तिःप्रणङ्‌मर्त्यस्य ॥ रक्षाणोब्रह्मणस्पते ॥ ३ ॥

(प०) मा। न॒ः। शंसः॑। अर॑रुषः। धूर्तिः। प्रणक्। मर्त्यस्य ॥ रक्ष॑। न॒ः। ब्र॒ह्म॒णः॒। प॒ते ॥ ३ ॥

सः। नः, अस्मान्। सिषक्तु, समवैतु, 'षच सामवाये' श्लुविकरणम्, अस्माभिः संयुक्तो भवेदिति यावत् ॥२॥ अररुषः, अरशब्दोऽलंशब्दपर्यायः, 'रुष हिंसायाम्', क्विप्, अतिहिंसकस्य। मर्त्यस्य। धूर्तिः, 'धुर्वी हिंसायाम्' क्तिन्, हिंसकः।– शंसः, वचनम्, उपद्रवकारि वचनमिति यावत्। नः, अस्मान्। मा प्रणक्, 'पृची संपर्के' न प्रविशेत्, मा प्रापदित्यर्थः ॥– [हे] ब्रह्मणः पते, हरे, वायो वा। नः, अस्मान्। रक्ष, यथा तद्वचोऽस्मान्न प्राप्नुयात्तथा रक्षेत्यर्थः ॥ ३ ॥ 'घ'

इति 'ह' इत्यस्यार्थे प्रसिद्धिद्योतकः, एवार्थे च ॥ यम् मर्त्यम् इन्द्रः ब्रह्मणः पतिः सोमः [च]। हिनोति, 'हि गतौ वृद्धौ च' गच्छति वर्धयति च। सः घ, स एव मर्त्यः। वीरः, विक्रान्तः। न रिष्यति, 'रिष हिंसायाम्', न हिंस्यते। {घ}, प्रसिद्धमेतत् ॥ इन्द्रब्रह्मणस्पतिशब्दयोः पूर्वत्रैव (२।४ / १३), (१८।१ / १७७) हरौ निरुक्तिर्व्यक्ता। सोमशब्दस्य तु–उश्च मा चोमे रुद्रलक्ष्म्यौ,–ताभ्यां सहित इति वा, 'भूतानि वै विश्व ऊमाः–' इति श्रुतेरूमैर्भूतैः सह प्रेरकतया

(१८०) सघा॑वी॒रोनरिष्यति॒यमिन्द्रो॒ब्रह्मण॒स्पतिः ॥ सोमो॑हि॒नोति॒मर्त्यम् ॥ ४ ॥

(प०) सः। घ॒। वी॒रः। न। रि॒ष्य॒ति॒। यम्। इन्द्रः। ब्रह्मणः। पतिः ॥ सोमः। हि॒नोति। मर्त्यम् ॥४॥

(१८१) त्वंतंब्रह्मणस्पते॒सोम॒इन्द्रश्चमर्त्यम् ॥ दक्षिणापा॒त्वंहसः ॥ ५ ॥ ३४ ॥

(प०) त्वम्। तम्। ब्र॒ह्म॒णः॒। प॒ते। सोमः। इन्द्रः। च॒। मर्त्यम् ॥ दक्षिणा। पा॒तु। अंहसः॥५॥३४॥

वर्तत इति वा, न विद्यते मा परिमितिर्यस्यासावमः,–सारत्वात्सः,–'सृ गतौ' इत्यतो डस्, सस्य रुत्वोत्वे,–गुणः,–पूर्वरूपम्,–सश्चासावमश्चेति वा निरुक्तिर्ज्ञेया ॥ ४ ॥ [हे] ब्रह्मणः पते [यस्त्वद्भक्तः] तम् मर्त्यम् त्वम्। अंहसः, पापात्। [पाहि] ॥ 'सोमः इन्द्रः दक्षिणा च पातु' इति प्रत्येकमन्वयः ॥ दक्षे दक्षिणभाग इनः स्वामी यस्या असाविति शकन्ध्वादितया पररूपेण दक्षिणात्र श्रीर्ज्ञेया, 'दक्षिणे सरलोदारौ–' (अम० ३।१।८) इत्यभिधानाच्चतुरत्व

हेतुना स्त्रीरूपो हरिर्वा ज्ञेयः ॥ ५ ॥ इति चतुस्त्रिंशो वर्गः ॥ ३४ ॥ [ अद्भुम् ]। अद्भुतम्, आश्चर्यम्। इन्द्रस्य प्रियम्। सर्वजनानामपि—काम्यम्। सनिम्, लाभस्वरूपम्। मेधाम्, ज्ञानस्वरूपम्। सदसः पतिम्, विष्णुम्, प्रधानवायुम्, प्रधानाग्निं वा। अयासिषम्, 'या प्रापणे', 'लुङ्' शरणं गतोऽस्मि ॥ ६ ॥ यस्मात्, सदसस्पतेः। ऋते।

(१८२) सदसस्पतिमद्भुतंप्रियमिन्द्रस्यकाम्यम् ॥ सनिंमेधामयासिषम् ॥ ६ ॥

(प०) सदसः। पतिम्। अद्भुतम्। प्रियम्। इन्द्रस्य। काम्यम् ॥ सनिम्। मेधाम्। अयासिषम्॥६॥

(१८३) यस्मादृतेनसिध्यतियज्ञोविपश्चितश्चन ॥ सधीनांयोगमिन्वति ॥ ७ ॥

(प०) यस्मात्। ऋते। न। सिध्यति। यज्ञः। विपःऽचितः। चन॥ सः। धीनाम्। योगम्। इन्वति॥७॥

(१८४) आदृध्नोतिहविष्कृतिंप्राञ्चंकृणोत्यध्वरम् ॥ होत्रादेवेषुगच्छति ॥ ८ ॥

(प०) आत्। ऋध्नोति। हविःऽकृतिम्। प्राञ्चम्। कृणोति। अध्वरम् ॥ होत्रा। देवेषु। गच्छति ॥८॥

विपश्चितः चन, ज्ञानिनोऽपि। यज्ञः न सिध्यति सः। धीनाम्, बुद्धीनाम्। योगम्।—इन्वति, प्राप्नोति, 'इवि व्याप्तौ', लट्, नुमागमः, बुद्धिप्रेरकत्वाद्धेयत्वाच्च 'धीयोगमाप्नोति' इत्युक्तम् ॥ ७ ॥ 'सदसस्पतिं विना यज्ञो न सिध्यति' इत्येतदत्रोपपाद्यते—[ यस्माद्विभुः सदसस्पतिः ]। हविष्कृतिम्, यजमानम्।—ऋध्नोति, हविष्कृतो यजतः स्वृद्धिं



करोति। [यस्माच्च]। अध्वरम्, यज्ञम्। प्राञ्चम्, उत्तमम्, प्रकृष्टतयाञ्चति प्रवर्तत इति व्युत्पत्तेः। कृणोति, करोति। [यस्माच्च] देवेषु, देवविषयाणि। होत्रा, होत्राणि, देवाह्वानानि, ह्वयतेः ऋप्रत्ययः, यजादित्वात्संप्रसारणम्, 'नञा निर्दिष्टमनित्यम्' इति 'क्ङिति च' इति निषेधाप्राप्तेर्वा बहुलग्रहणाद्वा गुणः। गच्छति, प्राप्नोति, स्वीकरोति। आत्, तस्मात् ॥—तेन विना यज्ञो न सिध्यति ॥—इति॥ अत्र स्वृद्धिकरणं सफलीकरणम्, उत्तमकरणं तु देवोपभोग्यतापादानम्, ( अन्यत्स्पष्टम्, )। त्रयाणां पूर्वं पूर्वं प्रत्युत्तरोत्तरो हेतुः ॥ ८ ॥ अत्र 'यस्य' इति 'तम्' इति च ग्राह्यम्॥ [यस्य],

(१८५) नराशंससुधृष्टममपश्यंसप्रथस्तमम् ॥ दिवोनसद्ममखसम् ॥ ९ ॥ ३५ ॥ १८ ॥

(प०) नराशंसम्। सुऽधृष्टमम्। अपश्यम्। सप्रथःऽतमम्॥ दिवः। न। सद्मऽमखसम्॥९॥३५॥१८॥

नराशंसस्य। सद्ममखसम्, सद्म—गृहरूपम्, मखसम्—मखशब्दपर्यायोऽत्र मखसशब्दो नपुंसकलिङ्गः,—यद्वा—सद्म—अग्निगृहम्, मखसम्—यज्ञश्च। दिवः, स्वर्गादप्यतिशयेन। 'प्रियम्' इति शेषः, [ प्रियम् ] न, प्रियमिव प्रतीयते। [तम्]। सुधृष्टमम्, सुधृष्टतमम्, 'समाने लोपः' इति ( म० व्या० ) सूत्राभ्निष्ठातकारलोपः, अतिशयार्थे मप्रत्ययो वा, प्रगल्भतमम्। सप्रथस्तमम्, प्रथसातिशयितगुणविस्तारेण सहितम्, 'प्रथ प्रख्याने' ततोऽसुन्, अतिशायने तमप्,। नरा

मन्त्रार्थ- शंसम्, नरैर्ब्रह्मादिपुरुषैः शंस्यते स्तूयत इति नराशंसस्तं नराशंसं विष्णुम् । [अहम्] अपश्यम् ॥-इति ॥ ९ ॥ मञ्जरी.
इति पञ्चत्रिंशो वर्गः ॥ ३५ ॥ अष्टादशं सूक्तम् ॥ १८ ॥ अथ 'प्रति त्यम्-' (१।१।१ / १८६) इत्येकोनविंशं नवर्चं
अ.१अ.१ वर्गद्वयात्मकमाग्निमारुतं गायत्रं सूक्तम् ॥ [हे] अग्ने, विष्णो, प्रधानाग्ने च । गोपीथाय, रक्षणाय । चारुम्, व० ३६
॥ ६७ ॥ भद्रम्, सम्यक्छास्त्रोक्तलक्षणम् । त्यम्, तम्, प्रसिद्धम् । अध्वरम्, यज्ञम् । प्रति, 'लक्षणेत्थंभूताख्यानभागवीप्सासु

(१८६) प्रतित्यंचारुमध्वरंगोपीथायप्रहूयसे ॥ मरुद्भिरग्नआगहि ॥ १ ॥

(प० ) प्रति । त्यम । चारुम । अध्वरम ।गोऽपीथाय । प्र । हूयसे ॥ मरुत्ऽभिः। अग्ने । आ । गहि॥१॥

(१८७) नहिदेवोनमर्त्योमहस्तवक्रतुंपरः ॥ मरुद्भिरग्नआगहि ॥ २ ॥

(प०) नहि । देवः । न । मर्त्यः । महः। तव । क्रतुम । परः ॥ ० ( १।१।१ / १८६ ) ॥ २ ॥

प्रतिपर्यनवः' इति वीप्सायां कर्मप्रवचनीयः प्रतिशब्दः, सर्वान्यज्ञान्प्रति । प्र हूयसे, आहूयसे । [ यस्मात्तस्मात् ]
मरुद्भिः [सह] । आ गहि, आगच्छ ॥ १ ॥ [हे] अग्ने क्रतुम् '[प्रत्यागन्तुम्]' इति शेषः ।तव [सकाशात्] परः, ॥ ६७ ॥
अन्यः । देवः । महः, महान्, पूज्यः । नहि, नैवास्ति । मर्त्यः [तु] न [एवास्तीति किमु? तस्मात् ] मरुद्भिः

आ गहि, पूर्ववत् ( १।१।१ / १८६ ) ॥ अत्र प्रतीतं सर्वोत्तमत्वं विष्णावग्नौ च यथायोगं ज्ञेयम् ॥ २ ॥ ये । अद्रुहः, न द्रुह्यन्तीति सतामद्रोग्धारः । विश्वे । देवासः, मरुतः । महः, महतः । रजसः, रञ्जकात्स्वर्गादिति यावत्, ल्यब्लोपनिमित्ता पञ्चमी, स्वर्गमधिष्ठायैव । विदुः '[अखिलम् ]' इति शेषः । [तैः], दूरदर्शनादिमद्भिः। मरुद्भिः अग्ने आ गहि

(१८८) येमहोरजसोविदुर्विश्वेदेवासोअद्रुहः ॥ मरुद्भिरग्नआगहि ॥ ३ ॥

( प० ) ये । महः । रजसः । विदुः । विश्वे । देवासः । अद्रुहः ॥ ० ( १।१।१ / १८६ ) ॥ ३ ॥

(१८९) यउग्राअर्कमानृचुरनाधृष्टासओजसा ॥ मरुद्भिरग्नआगहि ॥ ४ ॥

( प० ) ये । उग्राः । अर्कम । आनृचुः । अनाधृष्टासः । ओजसा ॥ ० ( १।१।१ / १८६ ) ॥ ४ ॥

(१९०) येशुभ्राघोरवर्पसःसुक्षत्रासोरिशादसः ॥ मरुद्भिरग्नआगहि ॥ ५ ॥ ३६ ॥

( प० ) ये । शुभ्राः । घोरऽवर्पसः । सुऽक्षत्रासः । रिशादसः ॥ ० ( १।१।१ / १८६ ) ॥ ५ ॥ ३६ ॥

( १।१।१ / १८६ ) ॥ ३ ॥ ये । उग्राः, क्रूराः, दैत्यान्प्रति । ओजसा, सामर्थ्येन । अनाधृष्टासः, अनाधर्षिताः, अनभिभूताः । अर्कम् । आनृचुः, प्राप्ताः, 'अर्च गतिपूजनयोः', लिट् । [तैः], अर्के सूर्ये विशेषेण संनिहितैः । मरुद्भिः, माभिर्वैदैरुतत्वहेतुना भगवद्रूपैः प्रसिद्धमरुद्भिश्च । अग्ने आ गहि ( १।१।१ / १८६ ) ॥ ४ ॥ ये । शुभ्राः, शुद्धाः । घोरं दैत्यान्प्रति क्रूरं

वर्पो बलं येषां ते घोरवर्पसः । सुक्षत्रासः, सुष्ठु क्षेत्रत्रातारः, सुष्ठु क्षतितस्त्रातार इति वा, सुपूर्वात् 'क्षि निवासे-' इत्यतः 'क्षि क्षये' इत्यतो वा डप्रत्ययः, 'त्रैङ् पालने' इत्यतः 'आतोऽनुपसर्गे कः' 'आज्जसेरसुक्' रिशादसः, रम्यसत्सु खभोक्तारः, रमेः डिः, रि रम्यं शं सुखमदन्तीति व्युत्पत्तेः, अत्तेः असुन् ।- एवंभूता ये मरुतः-[तैः] मरुद्भिः अग्ने आ गहि ($\frac{१९।१}{१८६}$) ॥ ५ ॥ इति षट्त्रिंशो वर्गः ॥ ३६ ॥ ये । देवासः, सुराः, मरुतः । नाकस्य, निर्दुःखस्य स्व



(१९१) येनाकस्याधिरोचनेदिविदेवासआसते ॥ मरुद्भिरग्नआगहि ॥ ६ ॥

(प० ) ये । नाकस्य । अधि । रोचने । दिवि । देवासः । आसते ॥ ० ॥ ( $\frac{१९।१}{१८६}$ ) ॥ ६ ॥

(१९२) यईङ्खयन्तिपर्वतान्तिरःसमुद्रमर्णवम् ॥ मरुद्भिरग्नआगहि ॥ ७ ॥

( प० ) ये । ईङ्खयन्ति । पर्वतान् । तिरः । समुद्रम् । अर्णवम् ॥ ० ( $\frac{१९।१}{१८६}$ ) ॥ ७ ॥

र्गस्य ।-अधि, स्वर्गस्योपरि । दिवि रोचने, 'रुच दीप्तौ-' ल्युट् ( युच् ), सूर्यादौ प्रकाशे च । आसते, तिष्ठन्ति । [तैः] मरुद्भिः अग्ने आ गहि ($\frac{१९।१}{१८६}$) ॥ ६ ॥ ये । पर्वतान्, गिरीन् । ईङ्खयन्ति, 'ईखि गतौ' गमयन्ति, प्रतोलय न्तीति यावत् । तथा- अर्णवम्, (अर्णांसि जलान्यत्र सन्तीत्यर्णवस्तम्, 'अर्णसो लोपश्च' इति वः सलोपश्च,) समुद्रम्, सागरम् । [च] । तिरः, तिरस्कृत्य । [वर्तन्ते] । विष्णौ तु- 'पर्वतान्, जन्मलक्षणपर्ववत्त्वात्पुरुषान्, पर्वन्श

॥ ६८ ॥

ब्दान्मतुबर्थे ('तप्पर्वमरुद्भ्याम्' इति ) तप्प्रत्ययः । ईङ्खयन्ति, प्रेरयन्ति । अर्णवम्, जलादिभूताधारत्वादुदकवन्तम् । समुद्रेकहेतुना 'समुद्रम्' इत्युक्तां प्रकृतिम् । तिरः, तिरस्कुर्वन्ति, नियमयन्ति ।' इति व्याख्या । [तैः] । मरुद्भिः, मरुन्नामकैर्देवैः सह, मरुदन्तर्गतैः पृथक्स्थितैर्वा रूपविशेषैः सह । अग्ने, विष्णो, प्रसिद्धाग्ने वा । आ गाहि ( $\frac{१९।१}{१८६}$ ) ॥ ७ ॥ ये । रश्मिभिः, तेजोभिः । [सर्वम्] । आ तन्वन्ति, व्याप्नुवन्ति । तथा-ओजसा, सामर्थ्येन । समुद्रम् ( $\frac{१९।७}{१९२}$ )

(१९३) आयेतन्वन्तिरश्मिभिस्तिरःसमुद्रमोजसा ॥ मरुद्भिरग्नआगहि ॥ ८ ॥

( प० ) आ । ये । तन्वन्ति । रश्मिऽभिः । तिरः । समुद्रम् । ओजसा ॥ ० ( $\frac{१९।१}{१८६}$ ) ॥ ८ ॥

(१९४) अभित्वापूर्वपीतयेसृजामिसोम्यंमधु ॥ मरुद्भिरग्नआगहि ॥ ९ ॥ ३७ ॥ १ ॥ १९ ॥

(प०) अभि । त्वा । पूर्वऽपीतये । सृजामि । सोम्यम् ॥ मधु ॥ ० ( $\frac{१९।१}{१८६}$ ) ॥ ९ ॥ ३७ ॥ १ ॥ १९ ॥

तिरः, तिरस्कुर्वन्ति । [तैः] मरुद्भिः अग्ने ( $\frac{१९।७}{१९२}$ ) आ गहि ( $\frac{१९।१}{१८६}$ ) ॥ ८ ॥ [अहम्] त्वा अभि, त्वां प्रति। पूर्वपीतये, प्रथमपानाय । सोम्यम्, सोमरूपम् । मधु, स्वादु द्रव्यम् । सृजामि, निर्मिमामि ॥ तस्मात्- मरुद्भिः अग्ने आ गहि ( $\frac{१९।१}{१८६}$ ) ॥९॥ इति सप्तत्रिंशो वर्गः ॥ ३७ ॥ आद्याध्यायस्थमन्त्रार्थान्भाष्यटीकानिरूपितान् ॥ समग्रहीष्म बालानां बोधाय प्रार्थिता वयम् ॥ ४ ॥ इति प्रथमाष्टके प्रथमोऽध्यायः ॥ १ ॥ एकोनविंशं सूक्तम् ॥ १९ ॥

॥ इति श्रीमन्मन्त्रार्थमञ्जर्यां प्रथमाष्टके प्रथमोऽध्यायः ॥

॥ अथ श्रीमन्मन्त्रार्थमञ्जर्यां प्रथमाष्टके द्वितीयोऽध्यायः ॥

ॐ ॥ अथ 'अयं देवाय-' ( २०।१/१९५ ) इति विंशमष्टर्चं वर्गद्वयात्मकमार्भवं ( ऋभुदेवताकम् ) गायत्रं सूक्तम्॥-



विप्रेभिः, विप्रैः, मेधातिथिप्रभृतिभिः। अयम्, बुद्धिस्थः । रत्नधातमः, रत्नं सुखम्, रमेः क्त्नप्रत्ययोऽनुनासिकलोपश्च, रत्नं धत्ते ददातीति रत्नधाः, 'डुधाञ् धारणपोषणयोः' अतिशयितसुखदाता रत्नधातमः, हेतुगर्भमिदम्। स्तोमः, स्तुतिः । जन्मने, सर्वजननकर्त्रे, जनेः कर्तरि मनिन्। देवाय, 'अग्निमीळे-' ( १।१/१ ) इत्यत्रोक्तदिशा क्रीडादिगुणविशिष्टाय विष्णवे। आसया, आस्येन, न केवलं मनसा, किं तु-वचसापीति भावः । अकारि, कृता,

(१९५) अयंदेवायजन्मनेस्तोमोविप्रेभिरासया ॥ अकारिरत्नधातमः ॥ १ ॥

( प० ) अयम् । देवाय । जन्मने । स्तोमः । विप्रेभिः । आसया ॥ अकारि । रत्नऽधातमः ॥ १ ॥

'डुकृञ् करणे' 'लुङ्'॥ आस्यन्ते क्षिप्यन्ते वर्णा अनयेत्यासा मुखम्, 'असु क्षेपणे' इत्यतः करणे घञ्, ( 'पुमान्' (३४), 'घञबन्तः' (३५), 'घाजन्तश्च' (३६) 'घञजबन्ताः पुंसि' इति पाणिनीयलिङ्गानुशासनस्य 'नौ वृ धान्ये' इत्यत्रानित्यत्वोक्तेः ( स्त्रीत्वम् ) ॥ देवतान्तरविषये तु- 'जन्मने, देवाय' इत्येकवचनं बहुवचनार्थे, जन्मने, जातेभ्यः, 'मानुषा एव हि ते देवा जाताः-' इति निगमात् 'ॐ तदुपर्यपि-'(१।३।२६)इत्युक्तन्यायाच्च मनुष्यत्वेन सतामेव देवत्वेन जातेभ्यः, देवाय, देवेभ्यः, ऋभुभ्य इत्यर्थः । अन्यत्समानम् ॥ ऋभुनामकस्यैकत्वेऽपि 'विभ्वा, वाजः' इति नाम्नोर



न्ययोः साहचर्यादृभुनाम्नैव त्रयाणां ग्रहणं ज्ञेयम् ( तत्साहचर्यं च 'ऋभुर्विभ्वा वाज-' ( ऋ० म० ४।३४।१ ) इति मन्त्रे स्पष्टम्, ॥ १ ॥ ये, ऋभवः । इन्द्राय, इन्द्रस्यार्थे । वचोयुजा, वचसा युज्येते इति वचोयुजा( जौ ), वाङ्मात्रेण । रथे योज्यौ । हरी, वाजिनौ । मनसा, संकल्पमात्रेण । ततक्षुः, चक्रुः, 'तक्ष करणे' इति धातोः। {ये} [च] । शमीभिः, विष्णुनिष्ठाभिः, 'शमो मन्निष्ठता बुद्धेः-' ( भाग० ११।१९।३७ ) इत्युक्तेः, स्त्रीलिङ्गं ङीप्च छान्दसौ । यज्ञम्, यज्ञभागम् । आशत, 'अशू व्याप्तौ-,' आश्नुवत, लेभिरे ॥-'[तेभ्यः] स्तोमः अकारि' इति पूर्वेण ( २०।१/१९५) अन्वयः ॥

(१९६) यइन्द्रायवचोयुजाततक्षुर्मनसाहरी ॥ शमीभिर्यज्ञमाशत ॥ २ ॥

( प० ) ये । इन्द्राय । वचःऽयुजा । ततक्षुः । मनसा । हरीइति ॥ शमीभिः । यज्ञम । आशत ॥ २ ॥

अत्र ऋभ्वादिदेवतागतानि लिङ्गानि तत्तदन्तर्यामिभगवद्रूपेषु मुख्यानीति 'ॐ शास्त्रदृष्ट्या तूपदेशो वामदेववत् ॐ' ( १।१।३० ), 'ॐ जीवमुख्यप्राणलिङ्गान्नेति चेत्-' ( १।१।३१ ) इत्यादिसूत्रे व्यक्तानीति तत्तदन्तर्गतरूपापेक्षया मन्त्राणां विष्णौ योजना सुशका ॥ पृथक्स्थितभगवद्रूपपक्षे तु-ये, भगवद्रूपविशेषाः । इन्द्रानुष्ठिताभिः-शमीभिः [ प्रसन्नाः ], । तदीयम्-यज्ञम् आशत । [ऋभुभिः] करणैः । इन्द्राय मनसा वचोयुजा हरी [च] ततक्षुः ॥-इति ॥-एवमग्रेऽपि ज्ञेयम् ॥ अध्यात्मं तु-ये । इन्द्राय, परमेश्वराय, तं विषयीकर्तुम्। भक्तानाम्-हरी, मनोबुद्ध्याख्यौ।

वचोयुजा, वेदानुसारिणौ । मनसा ततक्षुः । तदीयाभिः–शमीभिः तदीयम्–ज्ञानयज्ञम् [च] आशत ॥–इति ॥ २ ॥ [ऋभवः] । नासत्याभ्याम्, अश्विनोरेको नासत्यनामकः, तत्साहचर्यादुभावपि नासत्यावुच्येते, यथा–'दस्रौ–' ( अम० १।१।५१ ) इति, अत एव भारततात्पर्ये तृतीयाध्याये–'नासत्यदस्रौ–' (२९) इत्युक्तिः, अश्विनोरर्थे । परिज्मानम्, ज्मां भूमिं परितश्चरतीति परिज्मा, तं सकलपृथिवीगामिनम्, अप्रतिहतगतिम् । सुखम्, सुखेन वाह्यम् ।

(१९७) तक्षन्नासत्याभ्यांपरिज्मानंसुखंरथम् ॥ तक्षन्धेनुंसबर्दुघाम् ॥ ३ ॥

( प० ) तक्षन् । नासत्याभ्याम् । परिऽज्मानम् । सुऽखम् । रथम् ॥ तक्षन् । धेनुम् । सबःऽदुघाम् ॥३॥

(१९८) युवानापितरापुनःसत्यमन्त्राऋजूयवः ॥ ऋभवोविष्ट्यक्रत ॥ ४ ॥

( प० ) युवाना । पितरा । पुनरिति । सत्यऽमन्त्राः । ऋजुऽयवः ॥ ऋभवः । विष्टी । अक्रत ॥ ४ ॥

रथम् । तक्षन्, अतक्षन्, अकुर्वन् ॥ सबर्दुघाम्, 'ब कामने' इति धातोः कर्मणि रप्रत्यये सडागमे च 'सबर्' इति काम्यमुच्यते, सर्वकाम्यदोग्ध्रीम् । धेनुम्, बृहस्पतेः कामधेनुम् । [च] । तक्षन्, अतक्षन् ॥–इति ॥ ३ ॥ ऋभवः, ऋतस्य ज्ञानस्य भुव आश्रया इति ऋभुशब्दवाच्या विष्णुरूपविशेषाः, ऋतशब्दे निष्ठालोपः, 'भु' इत्यस्य ह्रस्वता, ऋतं कर्म भूतं सत्यं येषामिति वा, ऋतं यज्ञभागं भूताः 'भू प्राप्तौ' प्राप्ता इति वा ऋभवः प्रसिद्धदेवताश्च, ऋतभूतशब्द



योश्च ऋभावभुभावौ पृषोदरादित्वात् । ऋजूयवः, ऋजून् ब्रह्मत्वयोग्यानात्मनः स्वामित्वेनेच्छन्तीति ऋजूयवः, 'सुप आत्मनः क्यच्' इति क्यचि शीलार्थक उप्रत्ययः, 'अकृत्सार्वधातुकयोः–' इति पूर्वस्य दीर्घः,ऋजुभक्ता इति यावत् । अत एव–सत्यमन्त्राः, अमोघमन्त्राः सन्तः । पितरा, पितरौ, सुधन्वाख्यं पितरं स्वमातरं च, 'पिता मात्रा' इत्येकशेषः । पुनः । युवाना, युवानौ । अक्रत, अकुर्वत, जीर्णौ मातापितरौ पुनस्तरुणावकुर्वन् ॥ किं च, विष्टी, विष्टिम्, द्वितीयायाः 'सुपां सुलुक्पूर्वसवर्ण–' इत्यादिना पूर्वसवर्णः, वेतनेन विना बलात्क्रियमाणं कर्म । एकं चमसं चतुरः कृणोतन–'

(१९९) संवोमदासोअग्मतेन्द्रेणचमरुत्वता ॥ आदित्येभिश्चराजभिः ॥ ५ ॥ १ ॥

( प० ) सम् । वः । मदासः । अग्मत । इन्द्रेण । च । मरुत्वता ॥ आदित्येभिः । च । राजऽभिः ॥५॥१॥

( ऋ० म० १।१६१।२ ) इति वक्ष्यमाणदिशा–{ अक्रत }, देवानामर्थेऽकुर्वन्, 'डुकृञ् करणे', 'लुङ्' आत्मनेपदम्, विकरणलोपः ॥ अत्र ऋजुभक्तत्वाद्यन्यगतलिङ्गानि तदन्तर्याम्यपेक्षया नेयानि, 'ॐ शास्त्रदृष्ट्या तूपदेशः–' (१।१।३०) इति न्यायात् । तत्रापि, कथं नीचतापादकलिङ्गघटना? इति चेन्न, सर्वशास्तृत्वरूपसर्वव्यापारकर्तृत्वाख्यस्वातन्त्र्यात् । स्वातन्त्र्यस्य चान्यशब्दलिङ्गत्वे निमित्तत्वं च 'ॐ तदधीनत्वादर्थवत् ॐ' ( १।४।३ ) इति सूत्रसिद्धमिति ज्ञेयम् ॥ ४ ॥ [हे ऋभवः] । मदासः, मदहेतवः । [इंदवः], (१४।४/१३८) सोमाः । मरुत्वता इन्द्रेण च [सह] । राजभिः, दीप्य

मानैः । आदित्यैः च । वः, युष्माकम्, द्वितीयार्थे षष्ठी, युष्मान् । सम् अग्मत, संप्राप्ताः, 'गम्लृ गतौ' 'लुङ्' आत्मनेपदम्, उपधालोपादादेशौ छान्दसौ ॥ ५ ॥ इति प्रथमो वर्गः ॥ १ ॥ उत, अन्यच्च । [ ऋभवः ] । त्यम्, तम्, पूर्वकृतं जीर्णमेकमेव । चमसम्, पुनः । नवम्, नवान्, नूतनान् । चतुरः, चमसान् । अकर्त, अकुर्वन् ॥ एवम्-त्वष्टुः देवस्य । निष्कृतम्, शुश्रूषणम् । { अकर्त } ॥ अयं भावः-देवैः प्रेषितोऽग्निस्त्वष्टा च ऋभूनाहतुः-

(२००) उतत्यंचमसंनवंत्वष्टुर्देवस्यनिष्कृतम् ॥ अकर्तचतुरःपुनः ॥ ६ ॥

( प० ) उत । त्यम् । चमसम् । नवम् । त्वष्टुः । देवस्य । निःऽकृतम् ॥ अकर्त । चतुरः । पुनरिति ॥ ६ ॥

(२०१) तेनोरत्नानिधत्तनत्रिरासाप्तानिसुन्वते ॥ एकमेकंसुशस्तिभिः ॥ ७ ॥

( प० ) ते । नः । रत्नानि । धत्तन । त्रिः । आ । साप्तानि । सुन्वते ॥ एकम्ऽएकम् । सुशस्तिऽभिः ॥ ७ ॥

इममेकं जीर्णं चमसं नवानेतत्प्रमाणांश्चतुरश्चमसान्कुरुतेति । तेऽब्रुवन्-द्वौ वा त्रीन्वा करिष्यामश्चत्वारो दुष्करा इति । पुनश्चाग्निना त्वष्ट्रा च निर्बन्धे कृते स्वोक्तं द्वित्रकरणं परित्यज्य चतुर्निर्माणरूपं त्वष्ट्रादीनां शुश्रूषणं तैः कृतमिति ॥ ६ ॥ [ ये ] एवंभूता ऋभवः । ते । नः, अस्माकम् । सुन्वते, यजमानाय । त्रिः, त्रिकालेष्वपि । साप्तानि, सप्तसंख्याकानि, स्वार्थिकोऽत्राण्प्रत्ययः, 'सप्तनोऽञ्छन्दसि' इति वर्गार्थो वाञ्प्रत्ययः । रत्नानि, चतुर्वेदेतिहासपुराणपञ्चरात्राख्यानि वा तर्कमीमांसासहितपञ्चवेदाख्यानि वा गायत्र्यादिसप्तच्छन्दांसि वा, देवतान्तरपक्षे तु-'चक्रं रथो मणिर्भार्या निधिरश्वो गजस्तथा ॥ एतानि सप्त रत्नानि पूर्वेषां चक्रवर्तिनाम्' इत्युक्तरत्नानि। आधत्तन, दत्त ॥ सुशस्तिभिः, प्रशंसाहेतुभिर्गुणैर्युक्तम् । एकमेकम् [वा] । { आ धत्तन }, प्रयच्छत, तशब्दस्य

(२०२) अधारयन्तवह्नयोऽभजन्तसुकृत्यया ॥ भागंदेवेषुयज्ञियम् ॥ ८ ॥ २ ॥ २० ॥

( प० ) अधारयन्त । वह्नयः । अभजन्त । सुऽकृत्यया ॥ भागम् । देवेषु । यज्ञियम् ॥ ८ ॥ २ ॥ २० ॥

(२०३) इहेन्द्राग्नीउपह्वयेतयोरित्स्तोममुश्मसि ॥ तासोमंसोमपातमा ॥ १ ॥

( प० ) इह । इन्द्राग्नीइति । उप । ह्वये । तयोः । इत् । स्तोमम् । उश्मसि ॥ ता । सोमम् । सोमऽपातमा ॥ १ ॥

तनादेशः ॥ ७ ॥ वह्नयः, जगतो धारकत्वेन स्वयं स्थिरत्वेन च वह्निनामानः, धातूनामनेकार्थत्वाद्वहतिः अत्र धृत्यर्थः, ऋभवः । सुकृत्यया, सुकर्मणा । देवेषु, देवानां मध्ये भूत्वा । यज्ञियम् भागम्, यज्ञार्हं भागम् । अभजन्त, अभजन्, प्राप्ताः ॥ अधारयन्त [च], अधारयँश्च, प्राप्तं यज्ञभागमविच्छिन्नं यथा भवति तथा धृतवन्त इत्यर्थः, कालान्तरेऽपि स्थिरीकृतवन्त इति फलितोऽर्थः ॥ ८ ॥ इति द्वितीयो वर्गः ॥२॥ विंशं सूक्तम् ॥ २० ॥ अथ 'इहेन्द्राग्नी-'

( $\frac{२।१।}{२०३}$ ) इत्येकाविंशं षळर्चमेकवर्गात्मकमैन्द्राग्नं गायत्रं सूक्तम् ॥-[अहम्] इह, यज्ञे । इन्द्राग्नी उप ह्वये ॥ कस्मात् ? यस्मात्-तयोः इत्, इन्द्राग्न्योरेव । स्तोमम्, स्तुतिम् । उश्मसि, सर्वे वयं कामयामहे, 'वश कान्तौ' 'ग्रहि ज्यावयिव्यधिवष्टि-' इत्यादिना संप्रसारणम्, अनेन 'स्तुतिं प्रत्युपह्वये' इत्युक्तं भवति ॥ किं च, ता, तौ । सोमपातमा, सोमपातमौ, अतिशयेन सोमानां पातारौ । अतः-सोमम् [च प्रति] {उप ह्वये}॥ १॥[हे] नरः, ऋत्विजः।

(२०४) तायज्ञेषुप्रशंसतेन्द्राग्नीशुम्भतानरः ॥ तागायत्रेषुगायत ॥ २ ॥

(प० ) ता । यज्ञेषु । प्र । शंसत । इन्द्राग्नीइति । शुम्भत । नरः ॥ ता । गायत्रेषु । गायत ॥ २ ॥

(२०५) तामित्रस्यप्रशस्तयइन्द्राग्नीताहवामहे ॥ सोमपासोमपीतये ॥ ३ ॥

(प०) ता । मित्रस्य । प्रऽशस्तये । इन्द्राग्नीइति । ता । हवामहे ॥ सोमऽपा । सोमऽपीये ॥ ३ ॥

ता, तौ, प्रकृतौ । इन्द्राग्नी यज्ञेषु । प्र शंसत, प्रकर्षेण स्तुतिं कुरुत ॥ शुम्भत, भूषयत ।-[च] 'शुभ, शुन्भ शोभार्थे' अन्तर्णीतण्यर्थः ॥ किं च, ता, तौ, इन्द्राग्नी । गायत्रेषु, सामसु ।- गायत, तृतीयार्थे सप्तमी, गायत्रैः स्तुतेत्यर्थः ॥२॥ ता, तौ, प्रसिद्धौ । मित्रस्य, निरुक्तमेतत् 'मित्रं हुवे-' ( $\frac{२।७}{१६}$ ) इत्यत्र, हरेः । प्रशस्तये, प्रशंसार्थौ भवतः, देवैर्हि परमेश्वरस्य प्रशंसा लोकेषु ज्ञाप्यते ॥ ता, तौ । सोमपा, सोमपौ । इन्द्राग्नी सोमपीतये हवामहे [च] ॥ ३ ॥ 

[वयम्] उग्रा, उग्रौ, शत्रूणां क्रूरौ । सन्ता, सन्तौ, प्रशस्तौ इन्द्राग्नी । इदम् सवनम्, इमं यज्ञम् । सुतम्, सोमम् [च ] उप प्रति । हवामहे ॥ तदवधार्य-{ इन्द्राग्नी } इह आ गच्छताम्, गमेः लोट् ॥ ४ ॥ [हे] इन्द्राग्नी [यौ युवाम्] । महान्ता, महान्तौ, पूज्यौ । सदस्पती, सदसो यज्ञगृहविशेषस्य पती स्वामिनौ । ता, तौ । रक्षः, रक्षांसि,

(२०६) उग्रासन्ताहवामहउपेदंसवनंसुतम ॥ इन्द्राग्नीएहगच्छताम ॥ ४ ॥

(प०) उग्रा । सन्ता । हवामहे । उप । इदम । सवनम । सुतम । इन्द्राग्नीइति । आ । इह । गच्छताम

(२०७) तामहान्तासदस्पतीइन्द्राग्नीरक्षउब्जतम । अप्रजाःसन्त्वत्रिणः ॥ ५ ॥

(प०) ता । महान्ता । सदस्पतीइति । इन्द्राग्नीइति । रक्षः । उब्जतम ॥ अप्रजाः । सन्तु । अत्रिणः ५

(२०८) तेनसत्येनजागृतमधिप्रचेतुनेपदे ॥ इन्द्राग्नीशर्मयच्छतम ॥ ६ ॥ ३ ॥ २१ ॥

(प०) तेन । सत्येन । जागृतम । अधि । प्रऽचेतुने । पदे ॥ इन्द्राग्नीइति । शर्म । यच्छतम॥६॥३॥२१

एकवचनं बहुवचनार्थे । उब्जतम्, 'उब्ज आर्जवे' इति धातुपाठेऽपीह सामर्थ्याद्वधार्थः, हतमित्यर्थः ॥ किं च अत्रिणः, त्रय एषां सन्तीति त्रिणः, व्रीह्यादित्वादिनिः, न त्रिणोऽत्रिणः, स्वर्गमोक्षपृथिवीरूपपितृमार्गदेवमार्गमनुष्यमार्गाख्यमार्गत्रयहीनाः, तमोगतेरितिभावः, रक्षःसंबन्धिजनाः । अप्रजाः सन्तु॥-इति ॥ ५ ॥ [हे] इन्द्राग्नी [युवाम्] तेन, प्रसिद्धेन।

सत्त्येन, गुणपूर्णेन विष्णुना, तत्प्रसादेनेति यावत् । प्रचेतुने, प्रकृष्टचेतने, आधिक्यार्थ उकारः। पदे, गम्ये, 'पद गतौ' कर्मण्यकारप्रत्ययः, हरौ । अधि, सम्यगनन्ययोगेन, स्वभावतो वा । जागृतम्, तद्विषये जागरणवन्तौ स्थः ॥ एवंभूतौ-[अस्मभ्यम्] । शर्म, सुखम् । यच्छतम् ॥ विष्णुपक्षे तु-[हे] इन्द्राग्नी, विष्णुरूपे । [युवाम्] । तेन सत्त्येन प्रसिद्धेनेच्छादिना गुणेन । स्वविषये-जागृतम्, स्वसामर्थ्येनैव स्वप्रकाशौ स्थ इति ॥ अत्र सत्यशब्दस्य गुणपूर्तिवाचिता-सत्शब्दस्य 'सद्भावे साधुभावे च-'( गी० १७।२६ ) इत्यादेर्गुणवाचित्वात्सद्भिर्गुणैस्त्यो व्याप्त इति सत्शब्दोपप

(२०९) प्रातर्युजाविबोधयाश्विनावेहगच्छताम् । अस्यसोमस्यपीतये ॥ १ ॥

(प०) प्रातःऽयुजा । वि । बोधय । अश्विनौ । आ । इह । गच्छताम् ॥ अस्य । सोमस्य । पीतये ॥१॥

दात्तनोतेः ड्यप्रत्यय इत्येवंरूपेण ज्ञेया॥ ज्ञानेच्छादिगुणवाचित्वं तु-सत्शब्दपर्यायत्वात्सत्त्यशब्दस्येति ज्ञेयम् ॥['अस्मभ्यम्' इत्यादि पूर्ववत् ॥६॥ इति तृतीयो वर्गः ॥३॥ एकविंशं सूक्तम् ॥२१॥ अथ 'प्रातर्युजा-'( २२।१ / २०९ ) द्वाविंशमेकविंशत्यृचं वर्गचतुष्टयात्मकं नानादैवत्यं गायत्रं सूक्तम् ॥ तत्र-आद्याश्चतस्र आश्विन्यः-॥[हे होतः] । प्रातर्युजा, प्रातर्युजौ, प्रातःसवने स्तुतिविषयत्वेन युज्येते इति प्रातर्युजौ । अश्विनौ, प्रसिद्धाश्विनौ । तथा-प्रातर्युजा, प्रातर्युजौ, प्रातःकाले क्रियमाणहंसोपासनारूपसमाधिः प्रातर्युक्,उक्तं च तन्त्रसारे चतुर्थे-'प्रातर्योगो महानयम्'(२६)इति,तद्वि ॥ ७४ ॥

षयत्वाद्विष्णुरूपे अप्युपायोपेययोरभेदोपचारात् 'प्रातर्युजौ'इत्युच्येते। अश्विनौ,'अश्विना यज्वरीरिषो-' ( ३।१ / १५ ) इत्यत्रोक्तनिरुक्त्याविष्णुरूपविशेषौ। वि बोधय, सर्वदा विबुद्धावेव वर्तमानौ तौ प्रार्थयस्वेति यावत् ॥[तौ] इह अस्य सोमस्य पीतये आ गच्छताम् ॥१॥ या, यौ उभा देवा,उभौ देवौ । अश्विना,अश्विनौ । सुरथा,सुरथौ,शोभनरथौ । रथितमा, रथितमौ, अतिशयेन रथिनौ । दिविस्पृशा, दिविस्पृशौ, दिवि स्वर्गे वर्तमानौ । ता, तौ। हवामहे, आह्वयामः

(२१०) यासुरथारथीतमोभादेवादिविस्पृशा ॥ अश्विनाताहवामहे ॥ २ ॥

(प०) या । सुऽरथा । रथिऽतमा । उभा । देवा । दिविऽस्पृशा ॥ अश्विना । ता । हवामहे॥ २ ॥

(२११) यावांकशामधुमत्यश्विनासूनृतावती ॥ तयायज्ञंमिमिक्षतम् ॥ ३ ॥

(प०) या । वाम् । कशा । मधुऽमती । अश्विना । सूनृताऽवती ॥ तया । यज्ञम् । मिमिक्षतम् ॥ ३ ॥

॥ २ ॥ [हे] अश्विना, अश्विनौ । या । वाम् , युवयोः संबन्धिनी । मधुमती, स्वादुमती,अमृतस्त्रावित्वात् स्पर्शमात्रेण सर्वपदार्थस्वादुत्वकारिणी । सूनृतावती, सूनृता वेदवाणी, तया स्तुत्यतया तद्वती । कशा, अश्वादिनोदिनी। तथा [अस्मदीयम्] । यज्ञम्, यज्ञसंबन्धिघृतसोमादिवस्तुजातम् । मिमिक्षतम्, स्पृशतम्, 'मिक्ष स्पर्शने' श्लुविकरणम्,

मन्त्रार्थ- लोट्, यद्वा–'मिह स्पर्शने' इत्यतः स्वार्थिकसन्नन्तस्य रूपम् ॥ ३ ॥ [हे] अश्विना, अश्विनौ । यत्र ।–सोमिनः, यज मञ्जरी.
अ.१अ.२ मानस्य ।–गृहम् ।–'यत्र' इति द्वितीयार्थे सप्तमी । रथेन । गच्छथः, आगच्छथः । [तत्] । वाम्, युवयोः । दूरके, व० ४
दूरे ।–नहि अस्ति, नास्ति हि, दूरं न भवति हि ॥–तस्मादागच्छतम् ॥ ४ ॥ 'हिरण्य–' ( $\frac{२२।५}{२३३}$ ) इत्यादिचतस्रः
॥ ६ ॥ सावित्र्यः ॥–[अहम्]। हिरण्यपाणिम्, हितं च रमणीयं चेति वा हिरण्यवर्णत्वाद्वा हिरण्यं लक्षणया पाणिशब्दोक्तं

(२१२) नहिवामास्तिदूरकेयत्रारथेनगच्छथः ॥ अश्विनासोमिनोगृहम् ॥ ४ ॥

(प०) नहि । वाम् । अस्ति । दूरके यत्र । रथेन । गच्छथः ॥ अश्विना । सोमिनः । गृहम् ॥ ४ ॥

(२१३) हिरण्यपाणिमूतयेसवितारमुपह्वये ॥ सचेत्तादेवतापदम् ॥ ५ ॥ ४ ॥

(प०) हिरण्यऽपाणिम् । ऊतये । सवितारम् । उप । ह्वये ॥ सः । चेत्ता । देवता । पदम् ॥ ५ ॥ ४ ॥

सर्वावयवोपेतं रूपं यस्य तम्, हितशब्दस्य हिरादेशो रमेः न्यक्, अनुनासिकलोपश्च निरुक्तत्वात् । सवितारम्, जग त्प्रसवितृत्वहेतुना सवितृशब्दोक्तम्, षूङ् प्राणिप्रसवे, इत्यतस्तृच्, तृन्वा । ऊतये, रक्षार्थम् । उप ह्वये, आह्वयामि ॥ कुतः? सः, सविता । पदम्, स्वरूपम्, स्वस्यान्यस्य च । चेत्ता, ज्ञाता, 'चिती संज्ञाने' तृन् ॥ {सः} [एव]। ॥ ७५ ॥
देवता, देवः, अन्ये तु–देवताभासाः, अत्र देवताशब्दो देवपर्यायो ग्राह्यः, यद्वा–भावे तल्प्रत्ययः, देवस्य भावो

देवता, देवशब्दप्रवृत्तिनिमित्तं क्रीडादिगुणजातम्–{सः} [एव], तदभिन्नमेव, गुणगुण्यभेदस्य 'ॐ उभयव्यपदेशात्त्व हिकुण्डलवत् ॐ' ( ३।२।२८ ) इति भक्तिपादीयाधिकरणे सिद्धत्वात् । प्रसिद्धसवितरि यथायोगं शब्दार्थो ज्ञेयः ॥५॥ इति चतुर्थो वर्गः ॥ ४ ॥ [हे होतः] । अपाम् नपातम्, अद्भ्यो जातपृथिव्यात्मकदेहे हरेर्व्यक्ततयापां पौत्रत्वेनापां नपातम् ।–सवितारम्, हरिम् ।–अपां कार्ये ब्रह्माण्डे रवेर्जाततयापां पौत्रत्वेनापां नपातं सूर्यं च । अवसे, रक्षार्थम् ।

(२१४) अपांनपातमवसेसवितारमुपस्तुहि ॥ तस्यव्रतान्युश्मसि ॥ ६ ॥

( प० ) अपाम् । नपातम् । अवसे । सवितारम् । उप । स्तुहि ॥ तस्य । व्रतानि । उश्मसि ॥ ६ ॥

(२१५) विभक्तारंहवामहेवसोश्चित्रस्यराधसः ॥ सवितारंनृचक्षसम् ॥ ७ ॥

( प० ) विऽभक्तारम् । हवामहे । वसोः । चित्रस्य । राधसः ॥ सवितारम् । नृऽचक्षसम् ॥ ७ ॥

उप स्तुहि ॥ कुतः? तस्य, सवितुः, हरे रवेश्च । व्रतानि, कर्माणि । उश्मसि, सर्वे वयं कामयामहे, 'वश कान्तौ' 'ग्रहिज्या–' इति संप्रसारणम् ॥ ६ ॥ [वयम्] । चित्रस्य राधसः, उत्तमसिद्धिरूपस्य । वसोः, वसुनः । विभ क्तारम्, सदा विभज्य दातारम्, यस्य यावद्योग्यं तस्मै तावतो दातारम् । नृचक्षसम्, नृणां जीवानां द्रष्टारम्, अशे षपुण्यपापादिविशेषैः सह जीवचैतन्यसाक्षिणम्, चक्षिङः असुन् । सवितारम् । हवामहे, आह्वयामः ॥ ७ ॥

मन्त्रार्थ- [हे] सखायः, ऋत्विजः । आ, अस्मत्समीपमागत्य । नि सी(षी)दत ॥ कुतः ? ॥ नु, इदानीम् । नः, अस्माकम् । दाता, अभीष्टस्य दाता । सविता । स्तोम्यः, स्तोतव्यः ॥– [यः], सविता । राधांसि, सिद्धीः । शुम्भति, अञ्जसा शोभयति, 'शुभ, शुम्भ शोभार्थे' इत्युक्तेः ॥ ८ ॥ यथा प्रतीता अत्र (( २२१९/२१७ )–( २२१५/२२३ )) देवता ज्ञेयाः ॥ मञ्जरी-

अ.१अ.२ व० ५

॥ ७ ॥

(२१६) सखा॑यआनिषी॑दतसवि॒तास्तोम्यो॒नुनः॑ ॥ दा॒ताराधां॑सिशुम्भति ॥ ८ ॥

(प) सखा॑यः । आ । नि । सी॒द॒त॒ । स॒वि॒ता । स्तोम्यः॑ । नु॒ । नः॒ ॥ दाता॑ । राधां॑सि । शु॒म्भ॒ति॒ ॥८॥

(२१७) अग्ने॒पत्नी॑रि॒हाव॑हदे॒वाना॑मुश॒तीरुप॑ ॥ त्वष्टा॑रं॒सोम॑पीतये ॥ ९ ॥

(प) अग्ने॑ । पत्नीः॑ । इ॒ह । आ । व॒ह॒ । दे॒वाना॑म् । उ॒श॒तीः । उप॑ ॥ त्वष्टा॑रम् । सोम॑ऽपीतये ॥ ९ ॥

(२१८) आग्नाअ॑ग्नइ॒हाव॑से॒होत्रां॑यविष्ठभार॑तीम् ॥ वरू॑त्रीं॑धि॒षणां॑वह ॥ १० ॥ ५ ॥

(प) आ । ग्नाः । अग्ने॒ । इ॒ह । अव॑से । होत्रा॑म् । य॒वि॒ष्ठ॒ । भार॑तीम् ॥ वरू॑त्रीम् । धि॒षणा॑म् । व॒ह॒ १०॥५

(तत्र–) (नवम्यां दशम्यां चाग्निर्देवता ॥– [हे] अग्ने । उशतीः, यज्ञागमनं कामयमानाः । देवानाम् पत्नीः, देवानां पातृत्वात् 'पत्नी' इत्युक्ता हरेः स्त्रीतनूः, 'पत्युर्नो यज्ञसंयोगे' इति तु नाश्रितम्, देवपत्नीश्च । प्रागुक्तनिरुक्त्या ( १३।१०/१३२ ) त्वष्टारम्, हरिं प्रसिद्धत्वष्टारं च । सोमपीतये । इह उप आ वह, यज्ञे संनिहितान्कुर्वित्यर्थः ॥ ९ ॥ [हे] यविष्ठ, युवन् । अग्ने । ग्नाः, 'अ॒भि य॒ज्ञं गृ॑णीहि–' ( १५।३/१४९ ) इत्यत्रोक्तनिरुक्त्या भवदीयस्त्रीतनूर्नदीश्च । होत्राम्, ॥ ७६ ॥

आहूयमानत्वादाह्वानमन्त्राभिमानित्वाद्वा 'होत्रा' इत्युक्ताम्, 'ह्वेञ्–शब्दे–' इत्यतः कर्मणि करणे च त्रप्रत्ययः, संप्रसारणं च बहुलग्रहणात् । वरूत्रीम्, वरणीयत्वाज्जगतस्त्राणाच्च 'वरूत्री' इत्युक्ताम्, वृणोतेः कर्मण्यूकारस्त्रायतेः टप्रत्ययष्टित्त्वान्ङीप् च, वरूश्चासौ त्री च वरूत्री, ताम् । धिषणाम्, बुद्धिस्वरूपिणीम्, सर्वबुद्धिप्रेरिकां सर्वबुद्ध्यभिमानिनीं च । भारतीम्, भरतस्य वायोः स्वामित्वसंबन्धात्स्त्रीत्वसंबन्धाद्वा भारतीं विष्णोः स्त्रीतनुं भारतीदेवीं च । 'धिषणाम्'

(२१९) अ॒भिनो॑दे॒वीरव॑सामहः॒शर्म॑णानृपत्नीः॑ ॥ अच्छि॑न्नपत्राः॒सचन्ताम् ॥ ११ ॥

(प०) अ॒भि । नः॒ । दे॒वीः । अव॑सा । म॒हः । शर्म॑णा । नृ॒ऽपत्नीः॑॥ अच्छि॑न्नऽपत्राः । स॒च॒न्ता॒म्॥११॥

इत्यस्योक्तनिमित्ताभ्यां 'श्रीदेवीम्' इति वार्थः । अवसे, अस्मद्रक्षणाय । इह, यज्ञे । आ वह ॥ भरेण भारेण तत्वात्तत त्वात्, अतिगुरुत्वादिति यावत्, भरतो वायुर्ज्ञेयः, तनोतेः कर्मणि डः ॥ १० ॥ इति पञ्चमो वर्गः ॥ ५ ॥ (एकादश्या देव्यो देवताः ॥–) अच्छिन्नपत्राः, निरन्तरोपेतताटङ्काख्यकर्णाभरणाः, अवैधव्यहेतुनित्यसौमङ्गल्योपेताः । नृपत्नीः, नृपत्न्यः, नरो देवाः प्रधानपुरुषत्वात्, तेषां पत्न्यः, नृणां पालयितृत्वात्स्त्रीत्वाद्वा विष्णोः स्त्रीतनवस्तद्भार्याश्च । देवीः, देव्यः । अवसा, रक्षणकर्त्रा प्राणेन साकम् । महः, महतः सर्वोत्तमस्य हरेः ।–शर्मणा, तत्संबन्धिमोक्षादि

सुखं दत्त्वेति यावत्। नः, अस्मान्। अभि, अभितः। सचन्ताम्, रक्षन्तु, 'षच रक्षणे' ॥ ११ ॥ (द्वादश्यामिन्द्राणीवरुणान्यग्नाय्यो देवताः)॥–[ अहम् ]। इन्द्राणीम्, इन्द्रपत्नीम्। वरुणानीम्, वरुणस्य पत्नीम्। अग्नायीम्, अग्नेः पत्नीम्। [च]। सोमपीतये, सोमपानाय।–स्वस्तये, सोमं पीत्वास्मभ्यं संततं सौख्यं दातुमिति यावत्। इह उप ह्वये ॥ ईश्वरपक्षे तु–स्वामित्वेनेन्द्रादिसंबन्धिनीमिति वा पालकतयेन्द्रादिपत्नीत्वेन वेन्द्राण्यादिशब्दैरीश्वर

(२२०) इहेन्द्राणीमुपह्वयेवरुणानींस्वस्तये ॥ अग्नायींसोमपीतये ॥ १२ ॥

(प० ) इह। इन्द्राणीम्। उप। ह्वये। वरुणानीम्। स्वस्तये ॥ अग्नायीम्। सोमऽपीतये ॥ १२ ॥

(२२१) महीद्यौःपृथिवीचनइमंयज्ञंमिमिक्षताम् ॥ पिपृतांनोभरीमभिः ॥ १३ ॥

(प०) मही। द्यौः। पृथिवी। च। नः। इमम्। यज्ञम्। मिमिक्षताम्। पिपृताम् ॥ नः। भरीमऽभिः १३

स्त्रीतनवो ग्राह्याः ॥ 'पुंयोगादाख्यायाम्' इति ङीषि 'इन्द्रवरुणभवशर्वरुद्रमृडहिमारण्ययवयवनमातुलाचार्याणामानुक्' इत्यानुगागमे 'इन्द्राणी' इत्यादिरूपम्। 'वृषाकप्यग्निकुसितकुसीदानामुदात्तः' इत्यग्निशब्दस्यैआदेशे 'अग्नायी' इति च ध्येयम् ॥ १२ ॥ (त्रयोदशीचतुर्दश्योर्द्यावापृथिव्यौ देवते॥–) मही, महती। द्यौः पृथिवी च, विष्णोः स्त्री 

रूपे वा, श्रीभूमी वा, द्युपृथिवीलोकाभिमानिन्यौ वा। नः, अस्मदीयम्। इमम् यज्ञम्। मिमिक्षताम्, स्पृशताम्, आगच्छताम् ॥ आगत्य च– भरीमभिः, भृञः भाव इमनिच्प्रत्ययो गुणश्च, भरणैः। नः, अस्मान्। पिपृताम्, पारयेताम्।–'[ दुःखेभ्यः ]' इति शेषः, 'पृ पालनपूरणयोः,' लोट्, अन्तर्णीतणिच् ॥ १३ ॥ तयोः, द्यावापृथिव्योः संबन्धि, यत्। पीयते मुमुक्षुभिः सेव्यत इति पयः, ज्ञानम्। गंधर्वस्य, विष्णोः। ध्रुवे पदे, विषयसप्तमी, नित्यस्वरूपविषयम्। घृतवत्, 'घृ क्षरणदीप्त्योः' भावेक्तः, घृतं दीप्तिरपरोक्षज्ञानम्, तदस्यास्तीति घृतवदपरोक्षज्ञानसहितम्,

(२२२) तयोरिद्घृतवत्पयोविप्रारिहन्तिधीतिभिः ॥ गंधर्वस्यध्रुवेपदे ॥ १४ ॥

(प० ) तयोः। इत्। घृतऽवत्। पयः। विप्राः। रिहन्ति। धीतिऽभिः ॥ गंधर्वस्य। ध्रुवे। पदे॥१४॥

तज्ज्ञानम्। विप्राः, मेधाविनः। धीतिभिः, बुद्धिभिः, वृत्त्यपेक्षं बहुवचनम्। 'तयोः' इत्येतदत्राप्यन्वेति–{तयोः} तयोः प्रसादेन। रिहन्ति इत्, ( रलयोरभेदात् ) लिहन्ति, सेवन्ते, 'लिह आस्वादने' अत्र गां वाचं धारयन्वर्तत इति व्युत्पत्त्या गंधर्वो विष्णुर्ज्ञेयः, गोशब्दोपपदाभ्यां 'धृङ् अवस्थाने' 'वृतु वर्तने' इत्याभ्यां डः, उपपदस्य गंभावः ॥ ज्ञानस्य द्यावाभूमिसंबन्धित्वं च–तदभिमानिभारतीदेव्यभिमन्यमानत्वादिति ज्ञेयम् ॥ 'पा पाने' इत्यतोऽयसुक्प्रत्यय

